दूरध्वनिः – "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आं. प्र.) भारतम्.

संपुटः ११ | 15 th NOVEMBER 1973 | क्रमांकः ११



प्रमादीच-
कार्तिकांकः

शकाब्दाः १८९५

मूल्यम्
०–४० पैसाः

# विषयसूचिका



# रजतमहोत्सवः
# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु

(१२-१०-७३ तः १४-१०-७३ पर्यन्तम्)

१९४५ वर्षे संस्थापितयाः अत एव १९७० वर्षे एव रजतोत्सवयोग्यायाः अस्याः सभायाः रजतमहोत्सवः अक्टोबरमासे १२, १३, १४ तिथिषु त्रिषु दिनेषु महता वैभवेन संपन्न आसीत्।

भारते दूरदूरप्रदेशेभ्योपि अतिथयस्समागच्छन । जीवकारुण्यसंघे, बालाजीवसतिभवने, यात्रिभवने, कार्यदर्शिगृहे, प्रधानमन्त्रिगृहे, अन्यत्र च यथायोग्यं निवासभोजनादिव्यवस्था कल्पिता। विजयवाडा आकाशवाणी केन्द्रेण च समीक्षकत्वेन श्री तिरुमल रामचंद्रः प्रेषितः। दिशः प्रजानां मनांसि च प्रसन्नान्यासन्।

१२-१०-७३ दिने प्रातः ७-३० A. M. पण्डिताः, संस्कृताभिमानिनः, संस्कृतविद्यार्थिनः, अतिथयः, अन्ये च संस्कृतशुभाकांक्षिणः वेदघोषेण नगरयात्रामारभ्य ८-३० A. M. वेलायां प्राचीनसभाभवनस्य द्वारदेशं समुपागमन्। चित्तूरुमंडलदंडनायकः श्री ए. वल्लियप्पन्महोदयः श्री सि. वेंकटरमण अय्यरश्च सपूर्णकुंभं स्वागतेन सत्कृतौ सभान्त्रः प्राविशताम्। तत्र च शुक्लवितानालंकृतकायमाने महति आयोजितायां सभायां श्रीमति सि. वेंकटरमणार्ये आध्यक्ष्यं वहति सति श्री वल्लियप्पमहोदयः (चित्तूरु दंडनायकः) संस्कृतं तस्य प्रचारावश्यकतां, तत्र एतया सभया क्रियमाणानि कार्याणि च प्रशस्य एवमवोचत् – एतत्सभायाः कर्तव्यनिष्ठामभिनन्द्य तिरुमल तिरुपति देवस्थानेन पंचाशत्सहस्रं रूप्यकाणि अधुना

दत्तानि । तेन च अधुना रजतोत्सवशालायाः मूलशिला मया अर्प्यते । अपि चाहं अभिकांक्षे एकवत्सरांतर एव परिपूर्णस्य सभाभवनस्य उद्घाटनमपि कुर्यामिति । एवं वदता तेन चंद्रकान्तमूलशिलायाः यवनिका अपसारिता । सभ्याश्च चंदनतांबूलादिभिस्सत्कृताः सममोदन्त ।

अथ १० A. M. वेलायां जीवकारूण्यसंघभवने संस्कृतपुस्तकानां संस्कृतपत्राणां च प्रदर्शनं समुद्घाटितं चित्तूरुसर्वकारकलाशालाप्रांशुपालेन श्रीमता आर्. यस्. सुदर्शनंमहोदयेन । स च स्वभाषणे ग्रन्थानां प्रभावं तत्रापि संस्कृतग्रन्थानां अधुनातनकाले संरक्षणीयतां परिशीलनीयतां च सुव्यक्तमवदत् ।

मध्याह्ने ३ P. M. वेलायां अष्टावधानसभा जीवकारुण्यसंघे समाविष्टा आसीत् । अनेकशतवधानकर्ता शतावधानी श्री सि.वि. सुब्बन्नः अवधानोद्यत आसीत् । श्री के. वेंकटेशाचार्यः सर्वकारकलाशालायाः आंध्रशाखाध्यक्षः सभाया आध्यक्ष्यमवहत् । प्रष्टारश्च अष्टौ समाविशन् येषु शिरोमणिः विद्वान् पि. सुब्बराघवय्यः समस्यां, विद्वान् श्री वेंकटरेड्डिः दत्तपदीं, विद्वान् श्री एम्. कृष्णमराजः निषेधाक्षरीं, प्रवीणः प्रचारकः श्री मुंगरशंकरराजः अप्रस्तुतप्रशंसां, विद्वान् टि. वेणुनादपिळ्ळः वर्णनं, विदुषी श्रीमती आर्. कमलम्मा पुराणपठनं, विद्वान् अवधानं कृष्णशर्मा आशुकवित्वं, श्री के. राममूर्तिः M. A. घंटानदं च स्वीकृत्य अवधानिनोऽवधानं पर्यैक्षन्त ।

बहवः रसिकाः आन्ध्रदेशभाग्यभूतायाः एतस्याः अवधानक्रियायाः साक्षादनुभवेन परमानन्दमविन्दन्त ।

सायं ५-३० P. M. वेलायां डा॰ डि. जगन्नाथरेड्डिः (उपकुलपतिः श्री वेंकटेश्वरविश्वविद्यालयस्य) महोदयस्य आध्यक्ष्येण रजतोत्सवसंचिका श्री ए. वल्लिअप्पन् (चित्तूरुमण्डलाधिप) महो-

दयेन आविष्कृता। साहित्यसम्राट् इत्यादिबिरुदविभूषितः श्री जम्मुलमडक माधवरामशर्मा "संस्कृतसंस्कृतिः" इत्यंशं लक्षीकृत्य बहु उपन्यास्थत्, यत्रोपन्यासे काव्यपुराणवेदयज्ञमन्त्रतन्त्रागमादि-शास्त्राणां प्रस्तावः पदे पदे समभवत्। एवं भारतीयसंस्कृतेः संस्कृत-मेव मूलं, तस्मात् संस्कृतरक्षणाद्विना भारतीयतैव न जीविष्यतीति स सनिर्दनमवोचत्।

श्री जगन्नाथरेड्डिश्च स्वाध्यक्षभाषणे विश्वविद्यालयेषु संस्कृतविभागे विद्यार्थिनः दुर्लभा भवन्ति। संस्कृते परिशोधनविभागेपि अल्पा एव उपतिष्ठन्ति। संस्कृतं कस्यापि जातेः कुलस्य वा धन न भवति। भारतीयजातीयविद्याविधाने नियतं एतत् प्रवेश्य विद्या-विधानमेव पुनरुद्धरणीयं द्योतते। एतस्या भाषायाः प्रवेशस्य माध्य-मिकाः उन्नताश्च शाला एव योग्याः। आन्ध्रप्रदेशे ३२ संस्कृतपाठ-शालासु द्विशतं विद्यार्थिनः संस्कृतं पठन्ति। २६ नूतनाः प्राच्य-विद्यालया अपि संस्कृतं बोधयन्ति। जातीयैकतां, सांस्कृतिकैकतां, राजकीयैकतां च अपेक्ष्य संस्कृतं अवश्यं भारतदेशे सर्वत्र प्रबोधनीयं इति अवदत्।

रात्रिकालीया विनोदकार्यक्रमाश्च श्रीरामविलाससभाभवने निर्वर्तनीयत्वेन परिवर्तिताः।

अतः ८-३० P. M. वेलायां श्रीरामविलाससभाभवने रङ्गे तिरुपति श्री वेंकटेश्वर प्राच्यकलाशालीयया ललिताकलासमित्या "अश्वत्थामशपथम्" नाम्ना वेणीसंहारस्य तृतीयांकः प्रदर्शितः। कथाभागः आन्ध्रभाषायामनूद्य मुद्रितः सामजिकेभ्यः प्रदत्त आसीत्, येन ते संस्कृते प्रवर्तमानमपि नाटकं सुपरिचितमिव अन्वभूवन् आस्वादयंश्च। श्री वेदव्यासः अश्वत्थाम्नः, विजयकुमारः कृपस्य, मुरलीकृष्णारेड्डिः कर्णस्य, कृष्णप्रसादः सूतस्य भूमिकां अवहत्। आबालवृद्धं अभूतपूर्वं इदं संस्कृतरङ्गप्रदर्शनं प्रतिपदमस्तुवन्।

द्वितीयदिने १३-१०-७३ प्रातः जीवकारुण्यसंघभवने संस्कृत-भाषाप्रचारिण्यास्सभायाः सर्वसभ्यसमावेशस्समवर्तत । श्री ति. कं. तिरुवेङ्कटाचार्यः प्रधानमन्त्री आध्यक्ष्यमवहत् । आयव्ययपट्टिका च कार्यदर्शिना श्रीमता एन्. रामनाथार्येण पठिता सर्वैः आमोदिता च ।

परिपालकवर्गः कार्यनिर्वाहकवर्गश्च नूतनतया निर्वाचितः, यत्रैते वर्तन्ते ।

**परिपालकवर्गः**

गौरवाध्यक्षः – श्री एम्. अनन्तशयनं अय्यंगार्यः,
भूतपूर्वराज्यपालः, तिरुपति.

१. अध्यक्षः – श्री डा० बेजवाड गोपालरेड्डिः,
भूतपूर्वराज्यपालः, नेल्लूरु.

२. उपाध्यक्षः – श्री पी. राजगोपालनायुडु, चित्तूरु.

३. कार्यदर्शी – श्री एन्. रामनाथार्यः, अड्वोकेट्, चित्तूरु.

४. उपकार्यदर्शी – शिरोमणिः श्री एम्. वरदराजं पन्तुलु,
कांचीपुरम्.

५. कोशाधिपः – श्री ए. कन्नय्यश्रेष्ठी, चित्तूरु.

६. सभ्याः –श्री सी. वेंकटरमण अय्यर, अड्वोकेट्, चित्तूरु.

७. शिरोमणिः श्री कप्पगन्तुल लक्ष्मणशास्त्री, हैदराबाद.

८. श्री ति. कं. तिरुवेङ्कटाचार्यः, चित्तूरु.

९. श्री के. वी. एन्. अप्पाराव्, प्रांशुपालः,
आंध्रगीर्वाणकलाशाला, कोव्वूरु.

१०. श्री वी. एन्. रामस्वामिशास्त्री, गोपिचेट्टिपालेम्.

११. श्री आर्. करुणाकरन्, प्रांशुपालः,
केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपति.

१२. श्रीमती रत्नाबायी, M. A. चित्तूरु.

१३. चित्तूरु मंडलाधिपः (Ex-officio)

१४. श्री चिवुकुल मार्कंडेयशास्त्री (Ex-officio)
(उपविद्यानिर्देशकः)

## संरक्षकवर्गः

१. अध्यक्षः – श्रीमती सरोजिनी महिषी,
स्टेटमिनिस्टर, टूरिजम्, न्यूडेल्ही.

२. श्री वासुदेवद्विवेदी शास्त्री,
सार्वभौमसंस्कृतप्रचारकार्यालयः, वारणासी.

## कार्यनिर्वाहकवर्गः

१. प्रधानमन्त्री – श्री ति. कं. तिरुवेङ्कडाचार्यः, चित्तूरु.

२. परीक्षामन्त्री – श्री के. श्रीनिवासाचार्यः, मद्रास्-४३.

३. प्रकाशकमन्त्री – श्री के. मुनिरेड्डिः, चित्तूरु.

४. प्रचारकमन्त्री – श्री एन्. अनन्तरामशास्त्री, M. A.
गुंटूरु.

५. निधिमन्त्री – श्री पि. सुब्बराघवय्यः, चित्तूरु.

सभ्या -६. श्री एन्. रामनाथ अय्यर्, चित्तूरु. (Ex-officio)

७. श्री के. प्रह्लादगुप्तः, आल्लगड्ड.

८. श्री पि. वि. रमणमूर्तिः, M. A.
संस्कृतोपन्यासकः, सर्वकारकलाशाला, चित्तूरु.

९. श्री वि. शेषाचार्यः, तिरुपति.

१०. श्री के. एम्. मुरलीधरन्, पाकाल.

११. श्री सोमा श्रीनिवासन्, ४७, बरोडावीथी, मद्रास् - ३३

१२. श्री एम्. वरदराजन्, चित्तूरु.
१३. श्री बी. गोविन्दराजुलुशेट्टि, चित्तूरु.

### पाठ्यक्रमनिर्णायकसमितिः

१. श्री चिवुकुल मार्कंडेयशास्त्री, M. A. (Ex-officio)
२. श्री एन्. रामनाथय्यर्, B. A., B. L., चित्तूरु.
३. विद्याप्रवीणः श्री टि. के. तिरुवेङ्कटाचार्यः, चित्तूरु.
४. शिरोमणिः श्री के. श्रीनिवासाचार्य, मद्रास्.
५. शिरोमणिः कप्पगन्तुल लक्ष्मणशास्त्री, हैदराबाद.
६. शिरोमणिः श्री के. मुनिरेड्डिः, चित्तूरु.
७. शिरोमणिः श्री ए. वरदराजन्, चित्तूरु.

परितेषु प्रस्तावेषु केचन मुख्यांशा अत्र दीयन्ते ।

### (क) केन्द्रसर्वकारविज्ञापनाः

१. केन्द्रसर्वकारेण संकल्पितः संस्कृतविश्वविद्यालयः संस्कृतिकेन्द्रभूते तिरुपतिनगरे यथाशीघ्रं प्रतिष्ठापनीयः ।

२. भारतदेशे सर्वत्र पाठशालासु, कलाशालासु च संस्कृतोपाध्यायः एकैकः वा अवश्यं नियोजयितव्यः, शिल्पोपाध्यायावत् परिश्रमोपाध्यायवत् ।

३. भारतदेशीयेषु विश्वविद्यालयेषु सकलेषु च आन्ध्रविश्वविद्यालयादर्शेन स्वानुबन्धकलाशालासु संस्कृतडिप्लमो परीक्षाणां निर्वहणं संप्रार्थ्यते ।

४. भारतदेशे प्रतिप्रान्तं एकैका संस्कृतशोधसंस्था स्थापनीया ।

५. एतत्सभापरीक्षा कोविदा उन्नतस्तरेति निश्चित्य विश्वविद्यालयसंस्कृतपरीक्षाणां शिरोमणिविद्याप्रवीणादीनां पूर्वभाग (प्रिलिमनरी) सदृशतां आंध्रप्रदेशसर्वकारः अदादिति

कारणात् केन्द्रसर्वकारोऽपि एतां शात्रिपरीक्षासदृशीं अंगीकुर्यात् ।

### (ख) आंध्रप्रदेशसर्वकारं प्रति विज्ञापनाः

१. आंध्रप्रदेशे माध्यमिकोन्नतपाठशालासु प्रवर्तमानस्य संस्कृताभ्यासस्य अविच्छेदेन आन्तं प्रचलनार्थं जूनियरकलाशालासु अपि द्वितीयभाषात्वेन नियतं संस्कृतं आदेष्टुं प्रार्थयामहे ।

२. एतत्सभाकोविदोत्तीर्णानां संस्कृतबोधनाभ्यासपरीक्षायां प्रवेशं दापयेदित्यभ्यर्थना ।

३. उन्नतपाठशालीयसंस्कृतविद्यार्थिनां देशभाषाया इव संस्कृतस्यापि अंकान् समतया निर्णीय संस्कृतस्य देशभाषया सह समान प्रतिपत्तिं प्रददतु ।

४. श्री वेंकटेश्वरविश्वविद्यालयमादर्शत्वेनांगीकृत्य प्राच्य संस्कृत बी. ए. परीक्षाः प्रकटय्य, अन्ये च विश्वविद्यालयाः पाठ्यप्रणाल्यां आंग्लमपि संयोज्य, तेषां भाषापट्टभद्राणां राजकीयेषु सकलेषु उद्योगेषु अवकाशं कल्पयेयुः ।

मध्याह्ने ३ P. M. वेलायां गेयगैर्वाण्या आविष्करणमभूत् । अत्र आध्यक्ष्यवहनायाहूतस्य श्री आर्. करुणाकरमहोदयस्य अनुपस्थितेः तेन प्रेषितः श्री देवरकोंड सत्यनारायणमहोदय अध्यक्षपीठमधिष्ठाय श्रीकरुणाकरप्रदत्तं अध्यक्षभाषणं अपठत्, गेयगैर्वाणीमाविश्चकर च । चतुश्शास्त्रविद्वान् एन्. एस्. रामानुजताताचार्यः संस्कृतस्य गेयसाहित्यस्य च प्रशंसापूर्वकं गेयगैर्वाणीं प्राशंसत । ततः गेयगैर्वाणी संकलनकर्ता श्री ए. वरदराजमहोदयः तत्रत्यानि कतिचन गेयानि प्रगीय सभ्याननन्दयत् ।

सायं ५-३० P. M. श्री वी. राघवमहोदयाध्यक्ष्येण महाजनसभा समपद्यत। श्री वासुदेव द्विवेदी शास्त्री (सार्वभौमसंस्कृतप्रचारकार्यालयः, वारणासी) संस्कृतप्रचारस्यावश्यकतां प्रचारे च प्रचारकैरनुभूयमानानि संकटानि, संस्कृतस्य अद्यतनीमभिवृद्धिं च सुलभललितं उपन्यास्थत्। श्री कप्पगन्तुल लक्ष्मणशास्त्रिमहोदयः आन्ध्रे तदन्वबदत्। द्विवेदी महोदयश्चैवमवदत् – बहूनि संस्कृतसंस्थानानि भारते मयावलोकितानि। परन्तु एषा संस्कृतप्रचारसंस्था सर्वसंपन्ना मयानुभूयते। अन्यासंस्थानां स्वीयं निवासभवनं प्रायशः नास्त्येव। नागपुरे अत्र च मया संस्कृतगृहमवालोक्यत इति।

रात्रौ श्रीरामविलाससभाभवने विनोदकार्यक्रमः समवर्तत। श्री वाणीसंगीतनाट्यमंडल्या रोहिणीप्रायाभिर्बालिकाभिः भरतनाट्यं प्रदर्शितम्।

ललितकलासमित्या "हनुमत्संदेश" नाम्ना अभिषेकनाटकस्य तृतीयांकः प्रदर्शितः।

श्री वेदव्यासः रावणस्य, सदानन्दशास्त्री आंजनेयस्य, विजयकुमारः विभीषणस्य, हरिहरशास्त्री शखकर्णस्य च भूमिकां अधरत्।

तृतीयदिने (१४-१०-७३) प्रातः ८-३० A. M. वेलायां पाठ्यग्रन्थनिर्णायकवर्गसमावेशः समवर्तिष्ट। सभ्याः परिचयाभिज्ञविचक्षणपाठ्यानि यथापूर्वमंगीकुर्वन्, समर्थकोविदयोश्च कानिचन परिवर्तनानि अरचयन्, परीक्षाशुल्केषु परीक्षकेभ्यो देये च काचन अभिवृद्धिः आदिष्टा। एष नूतननियमः १९७५ संवत्सर सेप्टंबर परीक्षतः आचारे अवतरिष्यति।

मध्याह्ने ३-०० P. M. वेलायां गैर्वाणीताम्रोत्सवः प्रावर्तत। श्री कप्पगन्तुल लक्ष्मणशास्त्री (भूतपूर्व उपविद्यानिर्देशकः) आध्य-

क्ष्यमवहत् । श्री सी. वी. शेषाचार्यः (श्री वेंकटेश्वरप्राच्यकलाशालोपन्यासकः) संस्कृतपत्रनिर्वहणक्लेशान्, गैर्वाण्या प्रकाशनरीतिं, एतत्पत्रिकाविशेषांश्च अस्तोत् स्वभाषणे । अध्यक्षमहोदयश्च स्वभाषणे संस्कृतभाषयाः अन्यभारतीयभाषाणां च पारस्परिकं सन्निहितसंबन्धं उदाहरणपूर्वकमुपन्यस्य गैर्वाणीपत्रिकायाः संस्कृतप्रचारे सुलभतरभाषाविस्तरणे च कृतार्थतां, छन्दस्य अप्रदानेपि एतत्पत्रस्य नियतप्रेषणेन ग्राहकाणां मनःपरिवर्तनं च प्राशंसत ।

सायं ५-३० वेलायां श्री कृष्णशर्मणां अनुपस्थित्या व्याकरणशास्त्रपारीणः श्री बी. एन्. रामस्वामिशास्त्री महासभाध्यक्ष्यमवहत् । मधुरगानविशारदस्य यज्ञनारायणशर्मणः गीतगोविन्दगानेन सभा समारब्धा ।

डा० दिवाकर्ल वेंकटावधानिमहोदयः शाकुन्तलम्-कालिदासः इति विषयमधिकृत्य कालिदासकविताविशेषं तत्रापि शाकुन्तले तस्य सामर्थ्यविशेषं च सोदाहरणं उपन्यास्थत् ।

रात्रौ ९-३० P. M. वेलायां श्रीरामविलाससभाभवने विनोदकार्यक्रमः समजनि । वाणीसंगीतनाटयमंडल्या रोहिणीप्रायाभिः बालिकाभिः ससंगीतं भरतनाटयं प्रदर्शितम् । ललितकलासमित्या च "चाणक्यतन्त्रम्" नाम्ना मुद्राराक्षसतृतीयांकः प्रदर्शितः । अत्र ईश्वराचारी चाणक्यस्य, मुरलीकृष्णारेड्डिः चंद्रगुप्तस्य, कृष्णप्रसादः कंचुकिनश्च भूमिका अधरन् ।

त्रिष्वपि दिनेषु संस्कृतनाटकानि प्रजानां स्तोत्रपात्रण्यासन्, तत्र च दर्शकः भूमिकाधारी च वेदव्यासः प्रस्तुतोऽभवत् ।



# विजयतां कर्णाटकराज्यम्

**(मैसूरुराज्यस्य कर्णाटकराज्यमिति शुभनामकरणोत्सव पवित्रसन्दर्भे)**

**रचयिता विद्वान् श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्**

श्रीरामः किल यत्र वा जनकजां भार्यां विचिन्वन्पुरा
शूरैर्वायुसुतादिभिस्समुचितं साह्यं हि लेभे स्वयम् ।
अज्ञातां वसतिं च यत्र कठिनां पाण्डोस्सुताः चक्रिरे
देशोऽयं जगतीतले विजयतां कर्णाटनामा सदा ।।

भाषावाक्यमधूनि नाटककुले संवत्सहस्रद्वया-
त्पूर्वं ग्रीकजनैः मुदा किल मुहुः पीतानि यस्यैव वा ।
यद्वाण्यां बहुधा पुरन्दरमुखैः भक्तिश्च संवाहिता
देशोयं जगतीतले विजयतां कर्णाटनामा सदा ।।

ग्रंथो वा कविराजमार्गकलितः यस्यादिमः कीर्तितः
पम्पाद्यैः कवितल्लजैश्च महिमा ख्यातः मुहुर्यस्य वा ।
आरब्धो 'बसवेन' वा शिवपरः यत्रैव धर्मो नवः
देशोयं जगतीतले विजयतां कर्णाटनामा सदा ।।

'ह्यूयन्स्तांग'मुखैर्विदेशपथिकैः संकीर्तिता यत्प्रजाः
"निर्व्याजा अतिथिप्रियाश्शुभपराः कार्तज्ञ्यभूषा" इति ।
सीमा यस्य सरित्कवेरतनुजा गोदावरी वा स्मृता
देशोयं जगतीतले विजयतां कर्णाटनामा सदा ।।

देशे यत्र महासतीति विदिताः वीरांकिता वा शिलाः
पातिव्रत्यकथां च वीरचरितं नित्यं वदन्त्येव ताः ।
यस्योद्धारमहाध्वरेऽपि वनिताः दीक्षां गता यत्र वा
देशोयं जगतीतले विजयतां कर्णाटनामा सदा ॥

यद्देशे जकणादिशिल्पचतुरैः निर्मापितान्यादरात्
बेलूरादिपुरीषु शिल्पकलया संशोभितान्यन्वहम् ।
आकर्षन्ति च मन्दिरणि जनतां संदर्शनोत्कान् मुहुः
देशोयं जगतीतले विजयतां कर्णाटनामा सदा ॥

सङ्गीते निजनामशोभितमहामार्गः नवीनः पुरा
सृष्टो लास्यपथे यशः किल महत् संपादितं येन वा ।
विद्यारण्यमुखैर्यतीन्द्रमहितैः सम्पूजितो भक्तितः
देशोयं जगतीतले विजयतां कर्णाटनामा सदा ॥

यत्संरक्षणकार्यजातनिरताः 'चेन्नम्म' मुख्यास्त्रियः
काव्यक्षेत्रसुदीपने च निरताः 'होन्नम्म'मुख्यास्तथा ।
भक्ताग्रेसरकीर्तिशोभिवनिताः 'अक्का'दयो यत्र वा
देशोयं भुवनेश्वरीकरुणया संवर्धतामन्वहम् ॥



# गांधीकथा

रचयिता विद्वान् श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्.

कविसार्वभौमः भारतराष्ट्रीयसाहित्यसंगीतकलाक्षेत्रज्ञः विश्वविख्यात 'नोबेल' पुरस्कारविजेता रवीन्द्रनाथठाकूरमहाशयः कस्य वा भारतीयस्य चित्तपथाद्दूरो भवेत्? साहित्यसंगीतकलादिषु नवनवीनमार्गस्य संशोधने, तद्रचनाया ञ्चानवरतं तस्योत्साहः। क्रमेणात्मनस्सुखमपि सर्वथा विस्मृत्य कार्येऽस्मिन्संलग्नो बभूव। आत्मनः प्रकोष्ठे, बहिरुद्याने यत्र कुत्र वा स्थित्वा, दिवानिशं रचयति स्म गीतकानि नवानि, स्वरप्रस्तारान्नूत्नान्। अनेनैवानल्पेन कार्योत्साहेन तस्य स्वास्थ्यं क्रमेण जह्रास। विश्रान्त्यै मित्रैः दत्ता अपि परामर्शा मोघा बभूवुः।

एवं स्थिते, जातु महात्मागांधीमहाशः सत्यप्रियः, कविताप्रियस्य रवीन्दस्थ संदर्शनार्थं आजगाम। संदर्शनात्पूर्वं केचन कवे र्नीरोगताकांक्षिण स्सुहृदः महात्मनस्सन्निधिमागत्य प्रार्थयामासुः "राष्ट्रपितः" अयन्तु कविराजः शान्तिनिकेतनसंस्थापकः आत्मनशान्ति सर्वथा विस्मृत्यानवरतं रचनाप्रपञ्चे मग्नोस्ति। अस्मद्विनीतां प्रार्थनामपि तिरस्करोति। अतः भवान् एव समर्थः तत्सन्मार्गनयने। कृपया संदर्शनवेलायां तेन साकं, तद्विश्रान्त्यै उचिता व्यवस्था करणीया" इति।

राष्ट्रपितुः तत्रतो निर्गमनदिने तस्य प्रस्थापनसमारम्भे स्वयं ठाकुर आगत आसीत्। तदा गांधीमहोदयः गुरुदेवं प्रति "भोः कविवर! अस्ति मदीया भिक्षैका भवत्सन्निधौ। यदि प्रतिजानीते यच्छामिति वदाम्यवश्यम्" इत्यब्रवीत्।

"किं तत्? अवश्यं दास्यामि" इति प्रतिज्ञातम् रवीन्द्रेण। "सा तु भिक्षात्यल्पैका। भवता प्रत्यहं मध्याह्नात्परं एकापि होरा वा विश्रान्तिरुपलब्धव्या" इति स्वाशयं स्पष्टचकरोत् महात्मा।

वासरस्यैकस्य मध्याह्न समयः। कवीन्द्रस्य दर्शनार्थं तन्निकटसखा आचार्यः क्षितिमोहनसेनः आगतः। रवीन्द्रस्य प्रकोष्ठद्वारः बद्ध आसीत्। बहिरेवस्थितः आचार्यः "गुरो! तत्र भवद्दर्शनार्थं आगतोस्मि। अपि कस्मिन्नपि कार्ये मग्न?" इत्यपृच्छत्। गम्भीरेण स्वरेण उत्तरं प्रकोष्ठान्तर्भागादेवावाप" महात्मने गांधीमहाशयाय भिक्षां यच्छन्नस्मि इति। उत्तरेण चकितः सेनमहोदयः कवाटरन्ध्रेणापश्यत्, रवीन्द्रः खट्वायां अर्धनिमीलितनेत्र आसीत्।

## श्री-अप्पय्यदीक्षितेन्द्रजयन्ती (४२१)

सिकंदराबादनगरीयकीसोन्नतपाठशालायां १२-१०-७३ दिने सायं एष जयन्तीमहोत्सवः महावैभवेन संपन्नः आसीत्। तस्मिन् दिने प्रातः एकादशरुद्राभिषेकः, दीपाराधनं, अर्चनं इत्यादयः मरेडपल्यां ग्रन्थप्रकाशनसमितिकार्यालये आचर्यन्त।

सायं श्री के. एन्. अनन्तरामन् I. A. S. महोदयः सभाध्यक्षतां अवहत्, सामवेदपठनेन कार्यक्रमः प्रारब्धः। श्री डी. जी. षडे स्वागतवचनानि अवोचत्, श्री रामस्वामी घनपाठी दीक्षितेन्द्रस्य शुभचरित्रं व्यवृणोत्, श्री परायतं कृष्णमूर्तिशास्त्री दीक्षितेन्द्रस्य महाग्रन्थान् प्रास्तौत्, श्री वी. चंद्रमौलिः, I. A. S. दीक्षितेन्द्रस्य पांडित्यविशेषं समस्तुवत्। अध्यक्षः स्वभाषणे दीक्षितस्य आन्ध्रजातौ आन्ध्रभाषायां च अभिमानविशेषं प्राशंसत।

# प्रथमादीच - उत्तरायणपरीक्षाणां सप्ताहकार्यक्रमः

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आं. प्र.)

Programme for Samskrita Examination, March 1974

| विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणायान्तिमावधिः | १ रू. विलम्बशुल्केन सह आवेदनपत्र-प्रेषणाय अन्तिमावधिः | परीक्षाणां प्रचलनसमयः 1974 मार्च मासे |
|---|---|---|
| 20—1—74 | 31—1—74 | कोविदः 9, 10, 11 तिथिषु, विचक्षणसमर्थौ 9, 10 तिथ्योः, परिचयाभिज्ञे 9 तिथौ |

संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु. (आ० प्र०)
10-11-73

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

## सूचनाः

१. प्रेषितं परीक्षाशुल्कं कथं चिदपि न प्रत्यर्प्येत, न परिवर्त्येत, न वा स्थाप्येत । अतः आलोच्य आवेदनपत्रं परिपूर्य प्रेषणीयं ।

२. न्यूनतया प्रेषितं शुल्कं न कार्यकरि भवेत् । अतः यावदावश्यकं आलोच्य एकदैव प्रेषणीयं ।

३. न्यूनशुल्कं आवेदनपत्रं तच्छुल्केन सह व्यर्थं भवेत् । अतः शुल्कस्य आवेदनपत्राणां च अत्यंतसंगतिरावश्यकी ।

४. लेखे आवेदकानां नामानि, तच्छुल्कस्य प्रत्येकविवरणं चावश्यकानि ।

५. विशेषानुमति (Examption) कृते एकमासात्पूर्वमेव ५-०० रूप्यकाणि, पृथक् योजनीयानि तत्तदावश्यकयोग्यातापत्रादश्च प्रेषयित्वा अनुमतिर्गृहीतव्या ।

६. एकस्मिन्नगरे बहूनि केन्द्राणि नांगीक्रियेरन्, नैकमपि पञ्चन्यूनाभ्यर्थिसत्वे, न वा समीपस्थेऽन्यकेन्द्रे ।

७. केन्द्रस्थापनविषये न केवलं विद्यार्थिनां संख्या प्रधानं, अपि तु दुराचाराणां असंभवोपि परिशील्येत परीक्षामन्त्रिणा ।

---

**संस्कृतभाषाप्रचारिण्यास्सभायाः**

# स्थायिकेन्द्राणि

**आन्ध्रप्रदेशे –**

(१) अनन्तपुरम् (२) अनकापल्ली (३) आल्लगड्ड (४) कडप (५) काकिनाड (६) गुंटूरु (७) चित्तूरु (८) तिरुपति (९) दोम्मरनन्द्याला (१०) पेद्दापुरम् (११) भीमवरम् (१२) मछलीपट्टणम् (१३) मंत्रालय (१४) राजमंड्री (१५) विजयवाडा (१६) विजयनगरम् (१७) हिंदूपूरु (१८) हैदराबाद ।

**द्राविडप्रदेशे –**

(१) अंबत्तूरु (मद्रास्) (२) क्रोंपेट (मद्रास् - ४४) (३) कोयंबत्तूरु - ए (४) कोयंबत्तूरु - बी (५) तंजावूरु (६) तिरुचिरापल्लि (७) तिरुवेण्गाडु (८) तिरुनेल्वेलि (९) त्यागरायनगर (१०) मदुरै - ए (११) मदुरै - बी (१२) मन्नार्गुडि (१३) मेट्टूरुडाम् (१४) श्रीरंगम् (तिरुच्चि) (१५) सेलम् ।

**कर्णाटकप्रदेशे –**

(१) बेंगलूरु (२) शाहपूर ।

**उत्तरप्रदेशे –**

न्यूडेल्ही ।

### अखिलभारतीयसंघटनाकार्यदर्शिनः माननीयस्य

# एम्. पि. दिग्वेकरस्य आगमनम्



पेद्दापुरीग्रामे विश्वहिन्दूपरिषद्शाखा १९६७ वत्सरे स्वर्गीय-श्री जटावल्लभुल पुरुषोत्तममहोदयस्य शुभाशीर्भिस्संस्थापिता। तच्छाखाधिपै एत्र सम्यक् समालोच्य परीधाविनामसंवत्सरे मार्ग-शीर्षेकादश्यां निश्शुल्कसंस्कृतपाठशाला, धर्मवैद्यशाला, अन्नवित-दानकेन्द्रं च पुरजनसहकारेण समारब्धानि।

प्रतिदिनं सायंकाले पञ्चघण्टात आरभ्य घण्टाद्वयपर्यन्तं संस्कृताचार्येण श्री दर्भा चलमय्यशास्त्रिणा पाठशालाकार्यक्रमः प्रचाल्यते। तस्मिन्नेव समये डाक्टर श्री बच्चु सूर्यनारायणमूर्ति-महोदयेन, डाक्टर श्री चिलकमर्रि तिरुवेंगळाचार्यमहोदयेन च निश्शुल्कवैद्यशालाकार्यक्रमः स्वस्वकाम्पौण्डरसहायेन निर्वाह्यते। प्रतिभानुवासरं प्रातः पञ्चाशत् दीनेभ्यः जनेभ्यः श्री तम्मन सुब्बा-रावमहाशयस्य अचंचलदीक्षया अन्नवितरणकार्यक्रमः निरूह्यते। एत-द्विश्वहिन्दूपरिषद् कार्यक्रमस्य पर्यवेक्षणाय अखिलभारतीयसंघटना कार्यदर्शी माननीय एम्. पाण्डुरङ्ग दिग्वेकर महोदयः आगतवान्। तदागमनशुभसमये तद्गौरवार्थं पेद्दापुरीग्रामस्थ श्री कन्यकापर-मेश्वरी - आलये ११-१०-७३ भृगुवासरे प्रातःकाले अष्टघण्टारभ्य महती बहिरङ्गसभा प्रचालिता। बहवः पण्डिताः, जनाः, न्याय-वादिनश्च आहूताः आगताश्च। पाठशालाविद्यार्थिभिः गीतापठनं, आदित्यहृदयपारायणं, सूर्याष्टकपठनं, विद्यार्थिनीनां संस्कृतसंभा-षणं च अक्रियत दिग्वेकर महोदयस्य समक्षं। दिग्वेकरमहो-दयाय परिषदध्यक्षेण परिषदाशयानुद्दिश्य स्वागतपत्रं समर्पितं। तदनन्तरं दिग्वेकरमहोदयेन उपन्यस्तम्। उपन्यासानन्तरं संस्कृत-भाषाप्रचारिण्यास्सभायाः परिचयकक्ष्यायां उत्तीर्णेभ्यः विद्यार्थिभ्यः भगवद्गीतापुस्तकानि दिग्वेकरमहोदयेन बहूकृतानि। संस्कृता-चार्येण वंदनसमर्पणं च कृतं।

***

# मुकुन्दविलासः

श्री कुण्टिमद्दि शेषशर्माः, अनन्तपुरम्.

## बालमुकुन्दविलासः

श्रीवत्सचिह्नमपि शङ्खरथाङ्गपाणिं
मौळिस्फुरन्मणिकिरीटविभासमानम् ।
मन्दस्मितञ्च जननीतपसः फलञ्च
गोपालबालकमुकुन्दमहं नमामि ॥

कारागृहं स्वतनुकोमलकान्तिपूरै-
रापूरयन्तमरविन्ददलायताक्षम् ।
आनन्दखेदजनकं सकृदेव मातुः
गोपालबालकमुकुन्दमहं नमामि ॥

उद्गच्छति स्म कुतुकेन कळिन्दकन्या
यत्पादकञ्जयुगळीपरिचुम्बनाय ।
प्रादर्शयच्च पदवीं गमनाय रात्रौ
गोपालबालकमुकुन्दमहं नमामि ।

आविर्बभूव वसुदेवकळत्रगर्भा-
दानन्दहेतुरपि यः किल नन्दपत्न्याः ।
एकाऽऽमनस्यमपरा मुदमाप येन
गोपालबालकमुकुन्दमहं नमामि ॥

पीत्वा विषाक्तममरारिकुरङ्गनेत्रा-
स्तन्यं सजीवनमरुद्भिरमारय द्यः ।
भक्तैस्समं परमधाम निनाय तां, तं
गोपलबालकमुकुन्दमहं नमामि ॥

उद्धृत्य मञ्जुनिनदन्मणिकिङ्कणीक-
पादाङ्गदे, रहसि सिक्थितदुग्धमण्डम् ।
हर्तुं, न्यसन्तमवनौ चरनौ च मन्दं
गोपालबालकमुकुन्दमहं नमामि ॥

जग्ध्वा दधीनि प्रतिवेशगतानि, शेषं
तद्गोपिकावदनसीम्नि विलिप्य, तूर्णम् ।
यान्तं, विलोक्य जननीं प्रचलायितक्षं
गोपालबालकमुकुन्दमहं नमामि ॥

चूडामणीकृतमनोज्ञमयूरबर्हं
पादाङ्गदायितपुराणवचोविलासम् ।
वंशीनिनादहृतवल्लवयौवनं तं
गोपालबालकमुकुन्दमहं नमामि ॥

कादम्बिनीरुचिरमोहनदेहकान्ति
कादम्बपाण्डुमधुरस्मितभासमानम् ।
फुल्लत्कदम्बसुमहारविराजमानं
गोपालबालकमुकुन्दमहं नमामि ॥

कालाहिदन्तुरफणानटनाभिरामं
कायप्रभाद्विगुणयामुनपूरदीप्तिम् ।
कन्दर्पदर्पहरसुन्दरदिव्यमूर्ति
गोपालबालकमुकुन्दमहं नमामि ॥

– (अनुवर्तते)



# Samskritha Bhasha Pracharini Sabha,

## CHITTOOR. (A. P.)

## संस्कृतभाषाप्रचारिण्यास्सभायाः

# प्रमादीच - दक्षिणायनपरीक्षाफलानि

## चित्तूरु. (आं. प्र.)

## RESULTS OF SEPTEMBER EXAMINATIONS 1973.

The following are the Register Numbers of successful Candidates who appeared for the Samskrita Examinations held on 8th, 9th and 10th September, 1973.

### PARICHAYA

I Class:- 9 20 28 33 34 35 38
41 42 48 53 54 55 71 117 119 145
146 150 151 158 159 160 171 196 203 278
338 346 378 379 389 390 393 396 397 400
401 402 404 410 476 477 485 520 521 522
523 524 525 526 552 553 554 556 557 562
602 604 619 621 628 630 633 635 639 640
643 724 725 727 728 729 753 756 876 877
886 887 889 893 894 899 900 and 907.

II Class:- 7 8 37 44 45 46 47

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| 50 | 51 | 52 | 59 | 61 | 66 | 69 | 70 | 95 | 97 |
| 105 | 118 | 120 | 125 | 128 | 140 | 142 | 143 | 144 | 147 |
| 161 | 163 | 165 | 168 | 169 | 170 | 173 | 188 | 189 | 190 |
| 193 | 197 | 198 | 199 | 255 | 258 | 272 | 281 | 322 | 336 |
| 337 | 353 | 355 | 357 | 370 | 372 | 375 | 377 | 380 | 383 |
| 387 | 388 | 398 | 4[illegible]3 | 475 | 481 | 493 | 501 | 505 | 527 |
| 532 | 533 | 535 | 538 | 555 | 558 | 559 | 560 | 591 | 592 |
| 620 | 626 | 628 | 629 | 631 | 636 | 644 | 657 | 658 | 666 |
| 670 | 671 | 682 | 696 | 699 | 710 | 712 | 713 | 730 | 731 |
| 754 | 755 | 757 | 758 | 781 | 784 | 790 | 791 | 8[illegible]4 | 824 |
| 828 | 829 | 831 | 833 | 874 | 875 | 879 | 880 | 881 | 882 |
| 883 | 884 | 885 | 888 | 901 | 933 and 945. | | | | |

III Class:- 2 3 4 5 6 18 49

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| 60 | 65 | 67 | 96 | 104 | 109 | 111 | 127 | 130 | 131 |
| 138 | 141 | 143 | 149 | 162 | 164 | 167 | 172 | 174 | 175 |
| 176 | 191 | 193 | 195 | 200 | 201 | 202 | 254 | 259 | 260 |
| 261 | 266 | 273 | 274 | 275 | 283 | 310 | 311 | 312 | 313 |
| 315 | 316 | 318 | 321 | 324 | 325 | 335 | 339 | 340 | 343 |
| 345 | 356 | 373 | 376 | 382 | 384 | 385 | 386 | 391 | 392 |
| 394 | 399 | 423 | 424 | 425 | 480 | 482 | 483 | 486 | 487 |
| 489 | 491 | 495 | 498 | 499 | 500 | 502 | 504 | 511 | 512 |
| 528 | 529 | 530 | 534 | 536 | 537 | 563 | 583 | 593 | 594 |
| 601 | 603 | 618 | 622 | 624 | 625 | 637 | 669 | 673 | 681 |
| 683 | 686 | 697 | 698 | 711 | 716 | 726 | 734 | 737 | 738 |
| 751 | 759 | 782 | 783 | 785 | 786 | 806 | 807 | 825 | 826 |
| 835 | 837 | 839 | 840 | 841 | 845 | 873 | 905 | 906 | 908 |

910 and 937.

## ABHIJNA

I Class:- 11 12 19 121 122 236 252 441 541 548 651 676 677 678 741 811 and 938.

II Class:- 14 80 106 123 135 181 183 186 208 229 230 232 233 237 251 328 330 359 361 362 367 368 395 405 406 407 427 433 435 438 440 442 444 445 446 448 452 539 540 543 544 545 549 550 572 596 598 606 646 647 648 649 650 652 701 702 703 704 705 706 709 716 718 720 760 761 762 763 766 776 779 810 812 857 929 939 940 941 942 and 952.

III Class:- 1 16 74 75 76 79 81 108 112 113 152 153 156 179 182 184 185 187 205 215 216 217 218 225 228 231 234 238 240 242 243 347 348 349 363 408 409 428 432 434 443 449 450 451 453 454 456 546 551 565 566 568 569 570 571 573 574 577 580 595 597 605 693 700 708 717 719 721 722 723 749 764 768 778 787 788 789 809 855 856 858 862 864 920 921 923 928 947 and 948.

## VICHAKSHANA

I Class:- 770 771 772 and 813.

II Class:- 82 85 246 253 462 584 585 599 600 661 662 663 664 769 773 774 814 815 903 953 954 959 and 960.

III Class:- 17 21 83 84 86 245 247 332 333 470 519 581 582 595 679 956 957 and 958.

## SAMARTHA

I Class:- Nil.

II Class:- 116 and 479

III Class:- 87 114 115 478 611 665 924 925 and 926.

I Part only:- 90 286 287 288 289 290 291 292 293 294 297 299 300 301 and 680.

II Part only:- 32 612 and 775.

## KOVIDA

I Class:- Nil.

II Class:- Nil.

III Class:- 91 and 92.

I, II & III Parts only:- 93 and 94.

I & III Parts only:- 473 613 614 615 and 616.

I, III, IV & V Parts only:- 40 only.

I, III & V Parts only:- 474 only.

II & III Parts only:- 302 303 304 306 307 and 308.

II & IV Parts only:- 818 and 823.

III Part only:- 305 & 931.

III & V Parts only:- 816 and 817.

IV Part only:- 617 819 821 and 822.

The following candidates stood First in I Class in the Examinations mentioned below. Prizes will be awarded te them in due course.

PARICHAYA:- No. 553, Y. Rani, Puduchartam.

ABHIJNA:- No. 236, K. S. Srimathi, Chromepet, Madras.

VICHAKSHANA:-No. 772, S. Vedavalli, Srirangam.

# प्रमादीच - दक्षिणायनपरीक्षासु उपयुक्तानि केन्द्राणि – ५३

(१) अनन्तपुरम् (२) अंबत्तूरु (३) अनकापल्ली (४) आर्यवटम् (५) इन्द्रप्रस्थम् (६) कडप (७) कपिलेश्वर-पुरम् (८) कलिंगपट्टणम् (९) काकिनाड (१०) कुंभकोणम् (११) कोंडमाचुपल्ली (१२) कोत्तपेट (१३) कोरसवाड (१४) कोयंबत्तूरु - ए (१५) कोयंबत्तूरु-बी (१६) क्रोम्पेट (१७) चित्तूरु (१८) तंजावूरु (१९) तांबरम् (२०) तांडूरु (२१) तिरुपति (२२) तिरुचिरापल्ली (२३) तिरुनगर (२४) तिरुनल्वेलि (२५) त्यागरायनगर (२६) दोम्मरनंद्याल (२७) निवगाम् (२८) नेल्लूरु (२९) पांडिचेरी (३०) पिठापुरम् (३१) पुदुच्चत्रं (३२) पेद्दापुरम् (३३) भीमवरम् (३४) मंत्रालयः (३५) मदनपल्ली (३६) मदुरा -ए (३७) मदुरा-बी (३८) मछलीपट्टणं (३९) मन्नार्गुडि (४०) मुक्कामल (४१) राजमहेन्द्रवरम् (४२) लेपाक्षी (४३) वडुवूरु (४४) विल्लुपुरम् (४५) विशाखपट्टणं (४६) वृद्धाचलं (४७) श्रीकाकुलम् (४८) श्रीरंगम् (४९) श्रीरामापुरम् (५०) सत्यवेडु (५१) सेलम् (५२) हिन्दुपुरम् (५३) हैदराबाद् ।

# परीक्षाफलसारिणी

## प्रमादीच - दक्षिणायनपरीक्षासु उत्तीर्णाः – ६४०.

### SEPTEMBER EXAMINATIONS 1973.

| परीक्षाः | अभ्यर्थिनः | उत्तीर्णा | | | |
|---|---|---|---|---|---|
| | | प्र. श्रे. | द्वि.श्रे. | तृ.श्रे. | खंडशः |
| परिचयः | 513 | 85 | 126 | 141 | – |
| अभिज्ञः | 316 | 17 | 80 | 89 | – |
| विचक्षणः | 64 | 4 | 24 | 18 | – |
| समर्थः | 40 | – | 2 | 9 | 18 |
| कोविदः | 27 | – | – | 2 | 25 |
| आहत्य | 960 | 106 | 232 | 259 | 43 |

# तज्जीवनं भारतभूमिगौरवम्

ले. श्री वैद्य रामस्वरूपशास्त्री, संपादकः, बालसंस्कृतम्, बम्बई-८६

तज्जीवनं यद्धनदानसुन्दरं तज्जीवनं यत्र न लोभपाशः ।
तज्जीवनं यत्र न रागरोगः तज्जीवनं यत्परितोषपूर्णम् ॥
तज्जीवनं यत्र च सत्यमस्ति तज्जीवनं यत्र च शौचमस्ति ।
तज्जीवनं यत्र मनोविनिग्रहः तज्जीवनं यत्र दया परेषु ॥
तज्जीवनं कर्मपरायणं यत् तज्जीवनं धर्मपरायणं यत् ।
तज्जीवनं यत्र च यत्नपूजा तज्जीवनं यत्र परोपकारः ॥
तज्जीवनं यत्र धनागमः स्यात् तज्जीवनं यत्र च देशपूजा ।
तज्जीवनं यत्र गृहे सुखानि तज्जीवनं यत्र सतां समागमः ॥
तज्जीवनं यत्र च शौर्यमस्ति तज्जीवनं यत्र च धैर्यमस्ति ।
तज्जीवनं यत्र सुदक्षता स्यात् तज्जीवनं यत्र प्रसन्नता स्यात् ॥
तज्जीवनं यत्र नवीनता स्यात् तज्जीवनं यत्र न हीनता स्यात् ।
तज्जीवनं यत्र विशेषता स्यात् तज्जीवनं यत्र नवोन्नतिः स्यात् ॥
तज्जीवनं यत्र च देशनीतिः तज्जीवनं यत्र मिथः प्रतीतिः ।
तज्जीवनं यत्र जनानुरागः तज्जीवनं यत्र चमत्कृतिः स्यात् ॥
तज्जीवनं यत्र मिथो नमस्या तज्जीवनं यत्र च सन्मतिः स्यात् ।
तज्जीवनं यत्र सुसंस्कृतिः स्यात् तज्जीवनं यत्र च संस्कृतं स्यात् ॥
तज्जीवनं यत्क्षमया समेतं तज्जीवनं यद्विपदा विमुक्तम् ।
तज्जीवनं यत्समतापरीतं तज्जीवनं यत्र गुणानुरागः ॥
तज्जीवनं येन पिता प्रतुष्यति तज्जीवनं यत्र च हृष्यति प्रसूः ।
तज्जीवनं यत्र गुरोः प्रसन्नता तज्जीवनं यत्र हरिः प्रपद्यते ॥
तज्जीवनं यद्विनयेन भाति तज्जीवनं यत्र विभाति विद्या ।
तज्जीवनं यद्विनयेन रोचते तज्जीवनं विज्ञतयातिसुन्दरम् ॥
तज्जीवनं यत्र हरेरुपासनं तज्जीवनं यत्र गुरोश्च पूजनम् ।
तज्जीवनं यत्र गवां समर्हणं तज्जीवनं यद्यजनेन शोभते ॥
पठन्ति गीतां सकलाश्च लोकाः रामायणं भारतमेव भारते ।
स्वसंस्कृतेश्चापि चरन्ति चर्या तज्जीवनं भारतभूमिगौरवम् ॥

# जयतु गैर्वाणी

लेखकः श्री आर्. गोपालन्, चित्तूरु.

वाचामगोचरां वाणीं गैर्वाणीं निगमाम्बुधिम् ।
ध्यायेऽहं स्तौमि वन्दे च मनोवाक्कायशुद्धये ॥
स्वर्गापवर्गदां देवीं गैर्वाणीं सुमनोरमाम् ।
भजन्ति सुधियो लोके त्रिवर्गफलकाङ्क्षिणः ॥
सुधामयीं तु गैर्वाणीं अवाप्यापि दिवौकसः ।
पयोधिमथनं कृत्वा सुधायै क्लेशमाप्नुवन् ॥
ज्ञानं ददाति विज्ञानं प्रज्ञानं च तथा भुवि ।
ददाति वाञ्छितार्थं च नृभ्यो वाक् सुरसंस्कृता ॥
लोकैकमधुरां वाचं गैर्वाणीं वेदसंश्रिताम् ।
आनन्दमयकोशस्य निलयं प्रणमाम्यहम् ॥
चित्पुरीनिलयां दिक्षु प्रसरन्तीं यशस्विनीम् ।
गैर्वाणीं शङ्करीं यूयं सदा भजत भूतये ॥
गैर्वाणीपादसेवायां निरता ये महाशयाः ।
धन्या भवन्ति ते सर्वे कृतकृत्याः यशस्विनः ॥
वेदोपनिषदैः पूता या वाणी संस्कृता शुभा ।
सा नः पुनातु पापेभ्यो मोचयित्वा निरन्तरम् ॥
अष्टादशपुराणाढ्या इतिहाससमन्विता ।
स्मृतिभिस्सेविता दैवी वागस्तु भवतारिणी ॥
रसरीतिगुणोपेतैस्सर्वालङ्कारभूषितैः ।
काव्यैर्विराजते चैषा गैर्वाणी जगतीतले ॥
सर्वासु लोकभाषासु व्याप्तेयं सुरभारती ।
नालिप्ता लोकभाषाभ्यः तस्मादेषा विशिष्यते ॥
संश्लिष्टार्था ध्वनियुता गंभीरस्वरसंयुता ।
मन्त्रशास्त्रैकनिलया दैवी वाक् पातु नस्सदा ॥

SAMSKRITA BHASHA PRACHARINI SABHA, CHITTOOR.

## Income and Expenditure Account for the Year ended 31-3-1972

### EXPENDITURE

| | | | | |
|---|---|---|---|---|
| To Opening Stock of Books | | | 18,872 | 70 |
| ,, Cost of Paper & Ptg. Exps. for publication of books | | | 4,955 | 54 |
| ,, Cost of Out-side Purchase of books | | | 928 | 65 |
| ,, Cost of Job Printing and question papers | | | 1,089 | 57 |
| ,, Cost of Subscriptions for News paper & Periodicals | | | 152 | 52 |
| ,, Cost of M. O. & Bank Charges | | | 38 | 35 |
| ,, Cost of Audit Fees | | | 50 | 00 |
| ,, Cost of Conveyance Charges | | | 188 | 42 |
| ,, Cost of Building Maintenance | | | 129 | 60 |
| ,, Cost of Stationery and General Charges | | | 620 | 91 |
| ,, Cost of Paper and Ptg. Exps. for Silver Jubilee Sowneer. | | | 2,000 | 00 |
| **GAIRWANI MAGAZINE :** | | | | |
| To Salary for Editor | 1800 | 00 | | |
| ,, Salary for Sub. Editor | 1440 | 00 | | |
| ,, Salary for Clerk & Peon | 720 | 00 | | |
| ,, Cost of Blocks | 90 | 60 | | |
| ,, Cost of Paper Purchased | 2499 | 86 | | |
| ,, Cost of Ptg Exps. | 2307 | 00 | | |
| ,, Postage | 194 | 45 | | |
| | | | 9,051 | 91 |
| ,, Remn. of Pracharaks | | | 3,600 | 00 |
| ,, Remn. of Teachers | | | 7,200 | 00 |
| ,, Remn. of Clerk, Attender, and Sweeper | | | 1,020 | 00 |

| | | | |
|---|---|---|---|
| ,, Presentations for Students | | 800 | 00 |
| ,, Postage Expenses | | 1,370 | 54 |
| ,, Remn. Paid to Examiners | | 590 | 30 |
| ,, Remn. Paid to Supdts. | | 621 | 20 |
| ,, EXCESS OF INCOME OVER EXPENDITURE | | 10,778 | 20 |
| | Rs. | 64,058 | 41 |

INCOME

| | | | | |
|---|---|---|---|---|
| By Sale of Books | | | 5,871 | 60 |
| ,, Subscription from Members | | | 14 | 00 |
| ,, Subscription from Gairwani | | | 505 | 00 |
| ,, Examination Fees | | | 5,088 | 01 |
| ,, Interest Recd. | | | 2,059 | 43 |
| ,, Donations | | | 17,350 | 60 |
| GOVERNMENT GRANTS : | | | | |
| For Pracharaks Etc. | 4050 | 00 | | |
| ,, Library thro' Central Library | 425 | 00 | | |
| ,, Gairwani Magazine | 3000 | 00 | | |
| ,, Silver Jubilee Celebrations | 300 | 00 | | |
| | | | 7,775 | 00 |
| ,, Closing Stock of Books | | | 25,345 | 55 |
| ,, Suspence Account | | | 3 | 22 |
| ,, Donations for Silver Jubilee | | | 46 | 00 |
| | | Rs. | 64,058 | 41 |

For Associated Auditors,

**K. Harikrishnan,**

Sai. 12—10—73 *Partner.*

# SAMSKRITHA BASHA PRACHARINI SABHA, CHITTOOR.

**Balance Sheet as on 31st March, 1972.**

## LIABILITIES

| | | | | |
|---|---|---|---|---|
| SUNDRY CREDITORS | | | 1,828 | 33 |
| *Capital Account :* | | | | |
| B/F Rs. | 94,055 | 97 | | |
| *Add : Excess of Income over Expenditure* | 10,778 | 20 | | |
| | | | 1,04,834 | 17 |
| Difference in Books | | | 61 | 46 |
| Rs. | | | 1,06,723 | 96 |

## ASSETS

| | | | | | |
|---|---|---|---|---|---|
| Cash on hand | | | | 1,435 | 57 |
| *Cash At Banks :* | | | | | |
| The Co-op Town Bank : | | | | | |
| S. D. | 3079 | 2,232 | 23 | | |
| S. D. | 3386 | 101 | 29 | | |
| C. D. | 2941 | 303 | 21 | | |
| C. D. | 1938 | 834 | 41 | | |
| | | | | 3,471 | 14 |
| *Fixed Deposits :* | | | | | |
| The Co-op Town Bank | | 28,837 | 00 | | |
| The Andhra Bank Ltd. | | 1,000 | 00 | | |
| | | | | 29,837 | 00 |

| | | |
|---|---|---|
| *Cost of Furniture :* | | |
| As per last B/Sheet | 1,875 07 | |
| *Add :* During the year | 505 25 | |
| | | 2,380 32 |
| *Cost of Building :* | | |
| As per last B/Sheet | 30,693 83 | |
| *Add :* During the year | 234 40 | |
| | | 30,928 23 |
| *Cost of Library Books :* | | |
| As per last B/Sheet | 10,620 09 | |
| *Add :* During the year | 1,066 79 | |
| | | 11,686 88 |
| Closing Stock of Books | | 25,345 55 |
| SUNDRY DEBTORS | | 1,639 27 |
| | Rs. | 1,06,723 96 |

## AUDIT REPORT

We Certify that the above Statements of the Samskritha Basha Pracharini Sabha, Chittoor have been prepared in accordance with the books maintained by them and they are found to be correct to the best of our knowledge.

For Associated Auditors,
**K. Harikrishnan,**
*Partner.*

Sai. 12—10—73

## SAMSKRITA BHASHA PRACHAIRNI SABHA, CHITTOOR.

### INCOME AND EXPENDITURE STATEMENT FOR THE YEAR ENDED 31 st MARCH 1973

### EXPENDITURE

| | | | Rs. | Ps. |
|---|---|---|---|---|
| To Opening stock of books | | | 25,345 | 55 |
| ,, Cost of paper and printing charges for publication of books | | | 6,298 | 42 |
| ,, Cost of outside purchase of books | | | 721 | 05 |
| ,, Cost of Job Printing and Question papers | | | 1,016 | 48 |
| ,, Cost of subscription for News Paper and Periodicals | | | 96 | 00 |
| ,, Cost of M. O. and Bank Charges | | | 73 | 57 |
| ,, Cost of Audit fees | | | 75 | 00 |
| ,, Cost of Telegraph ie., Address Regn. | | | 50 | 00 |
| ,, Cost of Conveyance Charges | | | 681 | 67 |
| ,, Cost of Building maintenance | | | 91 | 30 |
| ,, Cost of stationary and general charges | | | 458 | 81 |
| *Gairwani Magazine :* | | | | |
| To Salary for Editor | 1,800 | 00 | | |
| ,, Salary for Sub-Editor | 1,440 | 00 | | |
| ,, Salary for clerk and peon | 720 | 00 | | |
| ,, Cost of blocks | 34 | 00 | | |
| ,, Cost of paper purchased | 2,011 | 33 | | |
| ,, Cost of printing charges | 2,218 | 00 | | |
| ,, Cost of postage | 174 | 48 | | |
| ,, Cost of S. D. for Prepayment | 20 | 00 | | |
| | | | 8,417 | 81 |
| To Remuneration of Pracharaks | | | 3,600 | 00 |
| ,, Remuneration of Teachers | | | 7,200 | 00 |

| | | |
|---|---|---|
| To Remuneration of Clerk, Attender and Sweeper | 1,220 | 75 |
| ,, Cost of presentations for students | 1,150 | 00 |
| ,, Cost of Postage paid | 1,537 | 06 |
| ,, Remuneration paid for Examiners | 580 | 55 |
| ,, Remuneration paid to Superintendents | 752 | 90 |
| ,, Excess of Income over Expenditure | 12,166 | 70 |
| TOTAL | 71,533 | 62 |

INCOME

| | | | Rs. | Ps. |
|---|---|---|---|---|
| By Sale of books | | | 7,120 | 72 |
| ,, Subscription from members | | | 68 | 25 |
| ,, Subscription from Gairwani | | | 576 | 60 |
| ,, Examination fees | | | 4,979 | 25 |
| ,, Interest Receipts | | | 4,223 | 13 |
| ,, Donations | | | 14,206 | 25 |
| *By Government Grants :* | | | | |
| For Pracharaks, Teachers | 4,050 | 00 | | |
| ,, Gairwani Magazine | 3,000 | 00 | | |
| ,, Silver Jubilee Celebration | 1,000 | 00 | | |
| | | | 8,050 | 00 |
| By Closing Stock of books | | | 32,240 | 80 |
| ,, Suspence Account | | | 68 | 62 |
| | | | 71,533 | 62 |

## SAMSKRITHA BASHA PRACHARINI SABHA, CHITTOOR.

**Balance Sheet as on 31st March, 1973.**

### LIABILITIES

| | | | Rs. | Ps. |
|---|---|---|---|---|
| SUNDRY CREDITORS | | | 2,338 | 28 |
| *Capital Account :—* | | | | |
| B/F Rs. | 1,04,834 | 17 | | |
| *Add : Excess of Income over Expenditure* | 12,166 | 70 | | |
| | | | 1,17,000 | 87 |
| Rs. | | | 1,19,339 | 15 |

### ASSETS

| | | | | Rs. | Ps. |
|---|---|---|---|---|---|
| By Cash on hand | | | | 664 | 83 |
| *Cash At Banks :* | | | | | |
| The Co-op Town Bank Ltd. | | | | | |
| S. D. | 3079 | 2,252 | 12 | | |
| S. D. | 3386 | 105 | 83 | | |
| C. D. | 2941 | 303 | 50 | | |
| C. D. | 1938 | 838 | 63 | | |
| | | | | 3,500 | 13 |
| *Fixed Deposits :* | | | | | |
| The Co-op Town Bank | | 34,362 | 00 | | |
| The Andhra Bank Ltd. | | 1,000 | 00 | | |
| | | | | 35,362 | 00 |

| | | | | |
|---|---|---|---|---|
| *Cost of Building :—* | | | | |
| As per last Balance Sheet | | | 30,928 | 23 |
| *Cost of Furniture :—* | | | | |
| As per last B/S | 2,380 | 32 | | |
| *Add :* During the year | 904 | 56 | 3,284 | 98 |
| *Cost of Library Books* | | | | |
| As per last B/S | 11,686 | 88 | | |
| *Add :* During the year | 1,038 | 05 | | |
| | | | 12,724 | 93 |
| Closing Stock of Books | | | 32,240 | 80 |
| Sundry Debtors | | | 484 | 14 |
| Difference in books | | | 149 | 11 |
| | | Rs. | 1,19,339 | 15 |

## AUDIT REPORT

We Cercify that the above Statements of the Samskritha Basha Pracharini Sabha, Chittoor have been prepared in accordance with the books maintained by them and they are found to be correct to the best of our knowledge.

(TRUE COPY)

For Associated Auditors,
**K. Harikrishnan,**
*Partner.*

Sai. 12—10—73

## List of Subscribers for Gairvani

| | | |
|---|---|---|
| 1. | Sri T. Bhaskra Rao, M. A. Guntur | 25-00 |
| 2. | Sri Vishnubhatla Koneswara Sarma, Guntur-2 | 25-00 |
| 3. | Sri B V. L. Narayana Sastry, M. A., Vijayawada-4 | 4-00 |
| 4. | Sri G. Sathyanarayana, M. A., Vijayawada-4 | 4-00 |
| 5. | Sri Lakshminarayana, M. A., Guntur-4 | 4-00 |
| 6. | Sri D. R. K. Sarma, B. Sc., B. Ed, Guntur | 4-00 |
| 7. | Sri P. Sathyanarayana, M. A., Vijayawada-5 | 4-00 |
| 8. | Sri A. Narasimhamurthy, M. A., Vijayawada-4 | 4-00 |
| 9. | Sri P. V. Acharya, M. A., Vijayawada-2 | 4-00 |
| 10. | Sri M. N. Guptha, M. A., Vijayawada-4 | 4-00 |
| 11. | Sri M. Gopalakrishnamurthy Sastry, Vijayawada-4 | 4-00 |
| 12. | Sti R. Muralidhara Rao, Vijayawada-4 | 4-00 |
| 13. | Sri K. Narasimha Rao, M. A., Vijayawada-4 | 4-00 |
| 14. | Sri P. S. Prasad, M. A., Guntur-2 | 4-00 |
| 15. | Sri K. G. C. Harivithal, M. Sc., Vijayawada-4 | 4-00 |
| 16. | Kumari P. Kalyani, M. A., Vijayawada-4 | 4-00 |
| 17. | Sri K. Suryanarayana, M. A., Vijayawada-4 | 4-00 |
| 18. | Sri V. V. R. Somayaji, M. A., Vijayawada-4 | 4-00 |
| 19. | Sri Pulicherla Sambasiva Rao, M. A., Guntur-4 | 4-00 |
| 20. | Sri Ch. Anjaneya Sastry, Vijayawada-4 | 4-00 |
| 21. | Sri M. S. Nageswara Rao, M. A., Guntur-2 | 4-00 |



*R. N. 1845/60.* *Postal R. H. No. 493.*
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

## प्रहेलिका

शीर्षे यस्य विराजते श्रुतिपदं गर्भेन्तशब्दं तथा
पादो यस्य यतीन्द्रनामलसितः घण्टावतारस्स्वयम् ।
पंक्त्यास्यारिसगर्भ्यमार्गपथिकः दुर्वादिसिंहः कविः
कोऽयं रङ्गकृपासुधांशुकलितो विज्ञोऽश्ववक्त्रार्चकः ॥

(वेदान्तदेशिकः)

विद्वान् श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्.

Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500